## अथ षड़र्थाः ।

—०*०—

बृहद्वला वरी तालो कटुकाऽतिविषा तथा ।
काकोली चैव षड़्वर्गं वीरायाञ्च प्रचक्षते ॥ १ ॥
सातला चोरकाकोली विभाण्डी चाजश्रृङ्गिका ।
कुञ्जरी दर्दुरश्चैव षड़्विषाणीति कीर्त्तिता ॥ २ ॥
नीलदूर्वा निशाऽऽह्वश्च रोचना च हरीतकी ।
बहुपुष्पी भिषग्वर्य्यैः शिवायां षड़मी स्मृताः ॥ ३ ॥
निम्ब-खर्जूरि-तालीसं मरिचं वृत्तमूलकम् ।
पलाण्डुश्चेति षड़मी निम्बसंज्ञाः प्रकीर्त्तिताः ॥ ४ ॥
मूर्वा स्रुक्का सहदेवा देवद्रोणी च केसरम् ।
आदित्यभक्ताः षड़िति देवीसंज्ञाः प्रकीर्त्तिताः ॥ ५ ॥
ब्राह्मणः क्षत्रियो वैश्यो दन्तः सर्पः खगस्तथा ।
द्विज-द्विजन्मशब्दाभ्यामीरिताः सूरिभिः सदा ॥ ६ ॥
गवादनी चैव दूर्वा गण्डदूर्वा च हस्तिनी ।
प्रतीची मदिरा चेति वारुण्यां षट् सुसम्मताः ॥ ७ ॥
हपुषा पीतनिर्गुण्डी विष्णुक्रान्ता जयन्तिका ।
शिताद्रिकर्णी-शङ्खिन्यौ षड़ेता अपराजिताः ॥ ८ ॥
कुमारी च वराही च बन्ध्याककीटको मृदुः ।
स्थूलैला स्थलपर्णी च षट्कन्याश्च कुमारिकाः ॥ ९ ॥

रा—२५

वीजद्रुमे गजे चैव सीसके नागकेसरे ।
विषे च पन्नगे चैव षट्सूक्तो नाग इत्यपि ॥ १० ॥
सूक्ष्मैला च महाराष्ट्री मत्स्याक्षी काकमाचिका ।
गण्डदूर्वा च गण्डूकी मत्स्यादन्यां षडीरिताः ॥ ११ ॥
माषे कलिङ्गे कोशाम्रे शल्ये काके च धूर्त्तके ।
मदनश्च समाख्यातः षडमी समुदाहृताः ॥ १२ ॥
दोड़ी गुडूची मेदा च काकोली हरिणी तथा ।
जीवन्ती चैव षट् प्रोक्ता जीवन्त्याश्च भिषग्वरैः ॥ १३ ॥
धूम्राट-भृङ्गौः खलु मांसले च प्लक्षे शिरीषे कुटजे कुलिङ्गः ।
द्राक्षा च दूर्वा जरणा कणा च कृष्णाभिधा वाकुचिका कटुश्च ॥१४॥

इति षडर्थाः ।

---

## अथ सप्तार्थाः ।

—:*:—

भद्रायान्तु बला नीली दन्ती काश्मरी सारिवा ।
श्वेताद्रिकर्णी गौरी च सप्त प्रोक्ता भिषग्वरैः ॥ १ ॥
मञ्जिष्ठा कटुका पथ्या काश्मरी चन्द्रवल्लभा ।
वन्दाकी रजनी चैव रोहिण्यां सप्त च स्मृताः ॥ २ ॥
धात्री बहुफलायां स्याच्छर्दिनी काकमाचिका ।
काम्भोजी च शशाण्डूली कटुतुम्बी च बालुकी ॥ ३ ॥

मण्डूकी ब्रह्मजा शङ्ख-पुष्पी ज्योतिष्मती मुनिः ।
विष्णुक्रान्ता वचा श्वेता मेध्यायां सप्त सम्मताः ॥ ४ ॥
आखुकर्णी सुतश्रेणी इन्द्राह्वा च कलिङ्गकः ।
गण्डदूर्वा गवाक्षी च चित्रायामृचमेकतः ॥ ५ ॥
रास्ना पाठा प्रियङ्गुश्च सितक्षुद्रा हरीतकी ।
श्रेयस्याश्चेति सम्प्रोक्ता अम्बष्ठा गजपिप्पली ॥ ६ ॥

इति सप्तार्थाः ।

---

## अथ अष्टार्थाः ।

—०*०—

विजया काञ्चनद्वन्द्वं मञ्जिष्ठा च वचा तथा ।
स्यात्तथा श्वेतनिर्गुण्डी जयन्ती काञ्जिकाऽभया ॥ १ ॥
एरण्डनद्याम्रलताकरञ्जाः स्याद्ब्रह्मदण्डी पनसः कुसुम्भः ।
स्याद्गोक्षुरः कण्टफले च धूर्त्तौ भिषग्भिरष्टाविति सम्प्रदिष्टाः ॥२॥
स्वर्णे कपिच्छे दधिनारिकेलयोः स्याज्जीवके चेत् स्थलपद्मके तथा ।
मयूरकेतौ समधूकके तथा माङ्गल्यमष्टाविति सम्प्रचक्षते ॥ ३ ॥

इत्यष्टार्थाः ।

---

## अथ नवार्थाः ।

—०*०—

वातारिर्जंतुकायाश्च भल्लग्रां नीलदवज्ञयोः ।
टेन्दुकामरूडयोर्भार्ग्यां निर्गुण्डग्रां शूरणे स्मृतः ॥ १ ॥
धात्री गुडूची रास्ना च द्विधा दूर्वा हरीतकी ।
लिङ्गिनी तुवरी मद्यं धीमतायां नवौषधी ॥ २ ॥
ब्राह्मी वराही लशुनी विषञ्च शुक्लादिकन्दः सितकण्टकारी ।
भूम्याहुली चेदपराजिता च शुण्ठीति चैतासु महौषधी स्यात् ॥३॥

इति नवार्थाः ।

## अथ दशार्थाः ।

—००—

सितायां वाकुची दूर्वा मद्यं धात्री कुटुम्बिनी ।
चन्द्रिका च प्रिया पिङ्गा त्रायमाणा च तेजिनी ॥ १ ॥

इति दशार्थाः ।

## अथैकादशार्थाः ।

—००*००—

स्यादभ्रमांसी तुलसी हरिद्रा
तालन्तथा रोचनहेममाचाः ।
जनप्रिया योजनवल्लिका स्यात्
समल्लिका चन्द्रशशी च गौर्य्याम् ॥ १ ॥

दूर्वा निशा ऋद्धिवचा प्रिया च
सा माषपर्णी शिशिरोचना त्वथ ।
त्रायन्तिका जीवनिका महाबला
मङ्गल्यकायामिति चन्द्रमाह्वयाः ॥ २ ॥
प्रियङ्गुछिन्ना त्रिवृता कणाह्वया
वन्दाकदूर्वा तुलसी च नीलिनी ।
दुर्गा खगः कस्तुरिकृष्णसारिवा
श्यामा महेन्दुः कथिता भिषग्वरैः ॥ ३ ॥

इत्येकादशार्थाः ।

इत्थं विचिन्त्य विनिवेशिततत्तदेका-
नेकार्थनाम-गण-संग्रह पूर्णमेनम् ।
वर्गं विचार्य्य भिषजा बहुभक्तिभाजा
ज्ञेया स्वयं प्रकरणानुगुणाः प्रयोगाः ॥ ४ ॥

एको यस्य मनस्विनामचतुरो यस्य द्वयोरश्विनो-
स्त्र्यचाच्चाचतुरो नृपञ्चवदनो नाम्नाऽरिषस्तां जयी ।
एकार्थादिरमुष्य नाम-रचना-चूड़ामणौ यस्त्रयो-
विंशोऽसौ समपूरि सार्द्धमसुना ग्रन्थेन वर्गो महान् ॥ ५ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्य्यायवत्यभि-
धानचूड़ामणावेकार्थाद्यभिधानस्त्रयोविंशो वर्गः ।

---

सम्पूर्णोऽयं ग्रन्थः